योग्यो योग्येन सङ्गतः। स्वेदाश्रुस्तम्भपुलकवैवर्ण्यादिभिरष्टसात्त्विक-भावैरुभौ विह्वलौ गद्‌गदिकया रुद्धकण्ठौ च निरीक्ष्य विप्राः सर्वे विस्मयाविष्टाः। अपगतमूर्च्छेन रामानन्देनाभ्यधायि—"क्व भवानीश्वरः साक्षान्नारायणः क्वाहं राजसेवी विषयी शूद्राधमः। मोहान्तानां स्वभाव एवेदृक् यत्ते कर्म्मातीता अपि पतितांस्तारयन्तो नवनवं प्रदेशं भ्रमन्ति।

महद् विचलनं नृणां गृहिणां दीनचेतसाम्।
निःश्रेयसाय भगवन् कल्पते नान्यथा क्वचित्॥

( श्रीमद्भागवते )

रविशशिसदृशयोः श्रीकृष्णचैतन्य-रामानन्दयोर्मध्ये दश दिवसान् रसवैचित्र्यपूर्णो निगूढः संलापोऽभूत्। येन तुल्यो नाभूत् न भविष्यति। अस्मिन् संलापे राधाकृष्णलीलानिगूढत्वं चमत्कारित्वञ्च व्यक्तं व्याख्यातं प्रकटीकृतञ्च। तदास्वादनमकृत्वा यो म्रियते स मृत एव।

गौतमीगङ्गा अहोवलं स्कन्दक्षेत्रं वृद्धकाञ्ची विष्णुकाञ्ची त्रिमल्लः पक्षतीर्थं कावेरीति तीर्थानि पर्य्यट्य पीताम्बरशिवम् ( चिदम्बर ) अमृतलिङ्गशिवं कुम्भकर्णकपालं पापनाशनविष्णुञ्च परिभ्रम्य पश्यंस्तान् प्रणत्य संस्तुत्य च प्रभुः श्रीरङ्गक्षेत्रमागतः। तत्र प्रभुर्ब्राह्मणानां गृहे गृहे भिक्षां कुर्वन् चातुर्मास्यञ्च पालयन् तत्रैकस्मिन् देवालये ब्राह्मणमेकं प्रत्यहं गीतां पठन्तं ददर्श। अश्रुकम्पपुलकाविष्टो ब्राह्मणः प्रतिदिनं तां पठति। तस्य अशुद्धावृत्तिं श्रुत्वा लोकास्तमुपहसन्ति गर्हयन्ति च। श्रीमन्महाप्रभुस्तस्य भावावेशं प्रत्यक्षीकृत्य एकदा तं पृच्छति—"कोऽर्थो यमनुभूय तवेदृशं सुखं जायते ?" ब्राह्मणो ब्रूते—"मूर्खोऽहं गीतार्थबोधो मे नास्ति। परन्तु यावदहं श्लोकानामावृत्तिं करोमि तावदहम् अर्ज्जुनस्य रथे रज्जुधरं

तमुपदिशन्तं श्यामसुन्दरं पश्यामि। तेन विपुलानन्दाप्लुतो भवामि"। मधुरमेतच्छ्रुत्वा गौरहरिः कथयति—"त्वमेव हि तावद्गीतापाठस्य अधिकारी, त्वमेव हि गीतार्थसारं जानासि।" इत्यभिधाय भावग्राही प्रभुस्तं प्रेमभरेणाश्लजत। प्रभोरालिङ्गनतः प्रभृति निर्म्मलबुद्धिः स ब्राह्मणः प्रभोश्चरणसेवी बभूव।

श्रीकृष्णचैतन्यप्रभुर्वेङ्कटभट्टभवने सुखमवतिष्ठते स्म। तयोर्द्वयोः कृष्णप्रसङ्गरङ्गः प्रचुरश्चलति। श्रीवेङ्कटस्य भ्राता प्रकाशानन्दसरस्वती दशसहस्रसन्न्यासिनां गुरुर्वाराणसीमधिवसति। वेङ्कटस्य दशवर्ष-देशीयो बालकः श्रीगोपालभट्टः परमरूपवान् स्निग्धस्वभावो दिष्ट्या प्रभोः कृपापात्रमभवत्। श्रीगोपालः प्रभुं परमं प्रीणाति स्म। भक्त-वत्सलो गौरहरिरेकदा सस्नेहं गोपालमादिदेश—"गोपाल, विवाह-स्त्वया नैव कर्त्तव्यः। त्रिंशद्वर्षवयःक्रमे त्वया श्रीवृन्दावनं गन्तव्यम्। त्वया बहूनि कर्म्माणि मम साधयितव्यानि। गोपालः प्रभोरादेशं शिरसि धृत्वा तस्य पादयोः पपात। एष गोपाल उत्तरकाले वृन्दावने षड्गोस्वामिनामेकतमो बभूव। यावच्चन्द्रार्कौ विद्येते तावद् गोपा-लस्य कीर्त्तिर्विषयं लप्स्यते। ईदृगेव गौरकृपाप्रभावः।

वेङ्कटभट्टेन इष्टगोष्ठीं कुर्व्वंस्तद्गृहे चातुर्मास्यं समाप्य पुनः प्रभुर्दक्षिणाभिमुखं चलति स्म। ऋषभगिरौ नारायणं श्रीशैले शिव-दुर्गे च भक्त्या सम्भाव्य कृतमालायां कृतस्नानः कस्यचिद् रामभक्त-विप्रस्य गृहे प्रभुरतिथिर्बभूव। मध्याह्नः समायातस्तथापि ब्राह्मणो नान्नं राधयति। प्रभुणा पृष्टः स भक्तिभरेण वक्ति—"वन्यशाकफलमूलानि लक्ष्मण आनेष्यति, सीता पाकं करिष्यति।" तृतीयप्रहरे प्रभुर्भिक्षां करोति। ब्राह्मणः स्वयमुपवसति। प्रभुरुपवासस्य कारणं किमि-त्यपृच्छत्। पृष्टः स उक्तवान्—"मम अधन्यजीवनेन किम्। जग-न्माता लक्ष्मीः श्रीसीतादेवी राक्षसेन स्पृष्टा इति श्रुत्वापि जीवामि। अहो मे जीवनं धिगिति"। प्रभुणाभिहितम्—"ईश्वरप्रेयसी

सीता चिदानन्दमूर्त्तिः। सा प्राकृतेन्द्रियाग्राह्या। रावणाग्रतः सीता अन्तर्दधे। केवलं सीताकृतिं मायासीतां स जहार।" एतेन वचनेनैव प्रबोधितः स विप्रः पूर्वभावं विस्मृत्य भोजनादिकं चकार। श्रीगौरचन्द्रे तस्य सहसा विपुला भक्तिरजायत। पुनः पत्न्या भक्त्या उत्तमभोगादिकं सम्पाद्य तेन प्रभुं परितोषयामास।

अनन्तरं श्रीकृष्णचैतन्यदेवस्ताम्रपर्णी स्नातस्तिलकाञ्ची-( तेन काञ्ची ) गजेन्द्रमोक्षणपाणागड़िश्रीवैकुण्ठमलयकन्याकुमारीकोलापुर-नासिक-त्र्यम्बक-ब्रह्मगिरय इति सहस्रं तीर्थस्थलानि भ्रमित्वा पुनर्गोदावरीं दृष्ट्वा रामानन्दचरितं ध्यायं ध्यायं गाढ़ोत्कण्ठाक्रमपर-वशो विद्यानगरं प्रत्यागतः। रामानन्देन तस्य पुनर्मिलनं बभूव। सुखतरङ्गिण्यां तरङ्गा उद्वेला बभूवुः। प्रभू रामानन्दस्य करे कृष्ण-कर्णामृतं ब्रह्मसंहिता इति संगृहीतं ग्रन्थद्वयमर्पयामास। ब्रह्मसंहिता परमसिद्धान्तखनिः। रामानन्दः पश्चात् नीलाचलं गमिष्यतीति निश्चित्य प्रभुर्नीलाचलं प्रातिष्ठत। प्रत्युद्गमनार्थं श्रीनित्यानन्दप्रमुखो भक्तगण आलालनाथे समवेतः सभां कृत्वोत्फुल्लमानसो नन्दति स्म।

---

## सम्पादकीया पश्चिमपरिचर्य्या

प्रियपाठकमहाभागाः! जागतिकनियमानुगत्या प्रतिवर्षमिव प्राप्तमपि वर्षमद्य प्रक्षीणायुष्कं परिष्करोति प्रथितानां परेशविधानाना-मनुल्लङ्घनीयताम्। अद्य पुनर्वर्षावसानमिव प्राप्तकालं विज्ञाप्यं नः किञ्चिद् वस्त्वन्तरमस्तीत्यवधानं भवद्भिर्दीयमानमभिलषामः। विलीय-माने वर्षे समाशंसितपूर्वाणि शुभशतानि पत्रिकासम्बन्धीनि प्रति-बन्धकबाहुल्येन वन्ध्यफलानीवास्मानतिमात्रं सन्तापयन्ति। प्राणैः प्रणैरेनामनारतमुपचरतामस्माकमद्य यावद् द्वादश वर्षाण्यतीतानीति

प्रविचिन्त्याप्यान्तरं किञ्चनानन्दममन्दप्रसरमनुभवामः। एतत्परिचर्य्यार्थमुपसम्भृतैरुपचारैर्भवतामपि कश्चित् सन्तोषः समापद्यत चेत्तदात्मानं कृतकृत्यं मत्वा भवद्भ्यो धन्यवादशतं वितरीतुमिच्छामः। परमतिमात्रं प्रयत्यापि प्रतिकूलांस्तांस्तान् विषयानवाप्य प्रारिप्सितमपि पत्रिकागतं मङ्गलं नैव निष्पादयितुमलमभवामेति क्लेशमनुभवामः।

अद्यत्वे पुनः परिषद्विद्यालयेऽध्यापनादिविधावतिव्यापृतात्मनो न मे समयोऽपि पर्य्याप्तः पत्रिकामिमामुपचर्य्यया सम्भावयितुम्। अनुपचारसम्भाविता चेयं प्रतिपदं विषीदन्ती भवतोऽपि सुतरां दुःखाकरोतीति प्रेक्षावत्प्रवृत्तिञ्चोपलभामहे। तदेवं पत्रिकागतं कल्याणविशेषं पाठकगोचरं सौमनस्यप्रकारमात्मीयञ्च समयाभावादिभिः परिचर्य्यासामर्थ्यमर्थतः समाकलय्यास्याः सम्पादनभारमात्मस्कन्धादवतारयामः।

अवतार्य्य च भारमिमं समर्थतरस्य तत्रभवतः क्षितीशचन्द्रचट्टोपाध्याय एम् ए, महोदयस्य स्कन्धे समारोप्य गुणवत्पात्रप्रतिपादितकन्याका इव स्वच्छान्तःकरणाः संवृत्ताः स्मः। नूतनवर्षप्रारम्भादेव तत्रभवन्तो भवतः पत्रिकाञ्च सममेव परिचर्य्यया परितोषयिष्यन्तीति दृढं विश्वसिमः। विश्वविद्यालयेऽध्यापयतामनवद्यविद्यागौरवसम्पन्नानामेषां चट्टोपाध्यायमहाभागानां सममाङ्गलभाषया व्याकरणज्ञानप्रावीण्यं साहित्यसरोऽवगाहित्वम् अलङ्कारपरिशीलननिष्कलङ्कित्वमद्यत्वे नान्यत्रावलोकयन्तोऽस्माभिः। काले व्यक्तीभविष्यतामेतेषां गुणसमवायानामस्मत्कृतोऽयमुपन्यासः सूचिरिव ग्रन्थस्य निमित्तमिव शुभाशुभस्य, कररेखेव मानवभागधेयस्य ज्ञापकतामाधत्ते न पुनर्निष्पादकताम्।

चिराय परिपोषितामिमामन्यस्मै प्रतिपादयतां यत्किञ्चनामानस्यं मनस्युदभूत्, तत् पुनः पात्रविशेषलाभलोभाद् विद्युत्प्रणाश

प्रनष्टमिति सहर्षमावेदयितुमग्रेसरामः। नवसम्पादकनिवेदनमभि-नववर्षारम्भे वैशाखपत्रिकायामुपचितममत्रभवतः पाठकमहाभागा-नानन्दयिष्यतीति प्रतिपन्नभाराणामधिकारे नास्माभिः स्थूलहस्तावलेपः प्रसूयते। जानीमहे, यदियं क्रमेण परिपुष्टशरीरेव परिलोकयिष्यति परिषत्प्रशस्तिमभिवाञ्छद्भिर्भवद्भिः।

सम्पादनभारं परिहरतापि परिचर्याभारोऽस्याः समं भवद्भि-र्मयाप्यङ्गीकृत एवास्ते। अवसरे पुनर्निबन्धदानादिद्वारा भवतामस्याः पत्रिकायाश्च परिचरणपरा वयं भवद्भिर्द्रष्टव्या एवेत्याशास्महे। तदेव-मवसरग्रहणायापृच्छ्यात्रभवतः पाठकमहाभागान् पश्चिमान्यस्माभिः सम्पादकरूपेण वितीर्णानि प्रणामाश्च परिरम्भाश्चाभिवादनशतानि च यथायोग्यं यथाकालमुपहारीक्रियन्त इत्येतावतीयमस्माकं पश्चिमा परिचर्या।